श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीशङ्कराचार्य विरचितं

# ॥ श्रीरङ्गनाथाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

# ॥ श्रीरङ्गनाथाष्टकम् ॥

आनन्दरूपे निजबोधरूपे ब्रह्मस्वरूपे श्रुतिमूर्तिरूपे।
शशाङ्करूपे रमणीयरूपे श्रीरङ्गरूपे रमतां मनो मे॥ १ ॥

कावेरितीरे करुणा विलोले मन्दारमूले धृत चारुकेले।
दैत्यान्तकालेऽखिल लोकलीले श्रीरङ्गलीले रमतां मनो मे॥ २ ॥

लक्ष्मीनिवासे जगतां निवासे हृत्पद्मवासे रविबिम्बवासे।
कृपानिवासे गुणवृन्दवासे श्रीरङ्गवासे रमतां मनो मे॥ ३ ॥

ब्रह्मादिवन्द्ये जगदेकवन्द्ये मुकुन्दवन्द्ये सुरनाथवन्द्ये।
व्यासादिवन्द्ये सनकादिवन्द्ये श्रीरङ्गवन्द्ये रमतां मनो मे॥ ४ ॥

ब्रह्मादिराजे गरुडादिराजे वैकुण्ठराजे सुरराजराजे।
त्रैलोक्यराजेऽखिल लोकराजे श्रीरङ्गराजे रमतां मनो मे॥ ५ ॥

अमोघमुद्रे परिपूर्णनिद्रे श्रीयोगनिद्रे ससमुद्रनिद्रे।
श्रितैक भद्रे जगदेकनिद्रे श्रीरङ्गभद्रे रमतां मनो मे॥ ६ ॥

सचित्रशायी भुजगेन्द्रशायी नन्दाङ्कशायी कमलाङ्कशायी।
क्षीराब्धिशायी वटपत्रशायी श्रीरङ्गशायी रमतां मनो मे॥ ७ ॥

इदं हि रङ्गं त्यजतामिहाङ्गं पुनर्नशाङ्गं यदि शाङ्गमेति।
पाणौ रथाङ्गं चरणेंबु काङ्गं याने विहङ्गं शयने भुजङ्गं॥ ८ ॥

रङ्गनाथाष्टकं पुण्यं प्रातरुत्थाय यः पठेत्।
सर्वान् कामानवाप्नोति रङ्गिसायुज्यमाप्नुयात्॥ ९ ॥

॥ इति श्रीरङ्गनाथाष्टकम् समाप्तम् ॥